# विषयसूचिका





वाणीं भजत गैर्वाणीम् !



# हे भारतैकते !

एकते ! भारतैकते !
पाकच्छलविदलनपटुबलसमञ्चिते !
एकते ! भारतैकते !
कांग्रेसीयघनमस्तके ! कम्यूनिष्टपृथुबाहुके !
स्वतन्त्रजनसंघदृढपादके ! स्वयंसेवकजीवके !
एकते !
हिंदूमुस्लिमसुघटितकवचिके !
अमन्दक्रैस्तवशिरस्त्राणके !
सिखवीरनिशितखड्गचण्डिके !
निखिलजैनबौद्धकरघटितखेटके !
एकते !
चातुर्वर्ण्यजनतापरिसेविते !
मातृदेशरक्षणदृढदीक्षिते !
नेतृशासनविधेयजनरक्षिते !
भ्रातृभावसंवर्धनपरीक्षिते !
एकते !
आसेतुहिमाचलसम्भाविते !
आबालगोपाललालिते !
आस्वासमस्माभिः पालिते !
आश्वासयास्मान् अनवरतं एकते !
एकते !

# सम्पादकीयम्

संस्कृतभाषायाः जातीयभाषात्वांगीकारे दाक्षिणात्यानां भावा अनुकूला वर्तन्ते इति शुभमयस्समासन्न इव । संस्कृतविरोधिनां डि. यं. के. पक्षीयाणां नायकानां अपि मनःपरिवर्तनं किंचिदिवाभवत् । हिन्दीस्थाने संस्कृतं वा मानयिष्यम इति ते तत्र तत्र स्वेषां भावं सूचयन्ति । हिन्दीनिवारणाय अन्यमुपायं अजानन्तस्ते इमं वादमुत्थापयन्ति । आंग्लस्य विदेशीयत्वात् औत्तराहागृहीतत्वात्, हिन्द्याश्च दाक्षिणात्यानभिमतत्वात् अगत्या जातीयभाषासिंहासनं संस्कृतमेवाह्वयति स्वं स्वमधिष्ठातुम् ।

परन्तु ते नायकाः इतःपूर्वं तद्विरुद्धप्रचारवरिष्ठाः इदानीं कंठतः संस्कृतम् सूचयितुं बिभ्यति । तदितरे च इतःपूर्वं एतद्भयात मौनमुद्राधारिणोपि इदानीं निर्भयं संस्कृतं सूचयितुमर्हन्ति । संस्कृताभावे हिन्द्या अपनोदनं दुश्शकं भवति । दौर्जन्यकार्यादिना आंग्लस्य तात्कालिकस्थितिसंपादनेपि क्रमशः तस्य क्षीणता हिन्द्याश्च क्रमोन्मेषः भवेदेव । तस्माद्दक्षिणापथस्य अनभीष्टं प्रसज्येतैव ।

संस्कृतस्यैव अंगीकारे हिन्द्या निरोधस्सुशकः । संस्कृतस्य अनुकूलाभिवर्धनपर्यन्तं च आंग्लस्य च यथापुरावस्थितिः भविष्यति । अन्ते च सकलभारतसम्मता संस्कृतभाषा संपूर्णा सर्वांगसुन्दरी समधिष्ठास्यति अधिकारपदम् ।

एतत्कार्यकरणे कोवा पक्षः पुरस्सरेदित्यत्रैव संशयो भवेत् । पक्षरहितानां व्यक्तीनां महतीनामपि सूचनानि तृणाय मनुते सर्वकारः । अतः एकः पक्षः पुरोगामी अन्याननुनयेत् ।

अत्र च डि· यं· के· पक्षस्यैव पुरोगामिता राजनीतिदिशा शुभकारिणीति द्योतते । तैः एतत्सूचनं यदि क्रियते हिन्दीविद्वेषिभिर्दाक्षिणात्यैः सर्वैरपि स वाद अनुमोद्येत । दक्षिणापथेन एककण्ठेन घोषितः स वादः औत्तराहैः निराकर्तुं न शक्येत । अपि तु परभाषानिरासप्रतिसूचनां ते चालयितुमपि न शक्नुयुः । वस्तुतस्तु ते अपि संस्कृतं मानयन्त्येव । स्वभाषादुरभिमानप्रच्छादनार्थं वा एतं वादं

ते अवश्यमंगीकरिष्यन्ति। तस्मात् संपूर्णभारतसम्मता भाषा सिद्धयेत्। भारतस्य गौरवं च विदेशेषु वर्धेत।

अपि च आगामिनि निर्वाचने कांग्रेसं पराजयितुं परिकरं बध्नतां डि.यं.के. स्वतन्त्रादिपक्षाणां यशः सुविस्तृतं भविष्यति। तद्विरोधिनां अपि तदुपरि संभाव्यमानाः सन्देहाः दूरीभविष्यन्ति। महासहायलाभेन असंख्याकसम्मतिप्राप्त्या च निर्वाचनविजयकिरीटप्राप्तिर्भविष्यति।

पूर्वं वृत्तं विस्मृत्य भारतभविष्यनिर्माणे सावधानैर्भाव्यं नायकैः। संस्कृतसूचनां यः प्रथमतः करिष्यति आगामिनि निर्वाचने तस्यैव पक्षस्य अमोघो विजयलाभो भविष्यति दक्षिणापथे।

अतः मार्जारिषकण्ठघण्टान्यायमपोह्य डि. यं. के. पक्षेण अन्येन वा एष संस्कृतवादः घोषयितव्यः। देशकालपात्रानुगुणतया राजनीतिर्विपरिवर्तते इति सुस्पष्टम्। गान्धिरेव आत्मना चिन्तितं कार्यं काले काले बुहुधा विपरिणमयति स्मेति सर्वविदितमेव।

अन्तर्गुडगुडायते बहिर्वक्तुं न शक्यते इतिवत् बहवः संस्कृतामीप्सवः निष्क्रिया वर्तन्ते। तेषां पुरोगमनाय नायको न भवति। प्रतिदिनं श्रूयन्ते पठ्यन्ते च वार्ताः संस्कृतभाषास्वीकारावश्यकताभिमानिभिः सर्वकाराय विज्ञापनपत्रमपि स्वयं समर्पितमिति।

प्रभुतायाः बधिरता अधिका वर्तते। अतः श्रुत्वापि नाकर्णितमिति सा वदति निष्पाक्षिकाणां वचनानि। अतः येन केनापि पक्षेण प्रधानतः डि. यं. के. पक्षेण एष वादः अंगीक्रियेतचेत् अद्यैव शुभसमये देशक्षेमः भविष्यति देशक्षोभश्च अपगमिष्यति।

अथवा दाक्षिणात्येन कांग्रेसेनैव एष वादः श्रावयितव्यः। तेन आत्मरक्षणं देशरक्षणं च भविष्यति।

एतन्निश्चितमागामिनि निर्वाचने यः पक्षः संस्कृतं स्वप्रतिज्ञासु प्रथमतः निवेशयिष्यति स विजेष्यतीति।

प्रजासु नायकेष्वद्य देशविच्छित्तिनोदनः।
संस्कृतेस्संस्कृतस्यापि रक्षाभावोऽभिवर्धताम्॥



# मुक्तकानि

## संकलयिता — मा. शिवरामराजः



दरिद्रविलापः

" दग्धं खाण्डवमर्जुनेन च वृथा, दिव्यद्रुमैर्भूषितं
दग्धा वायुसुतेन हेमरचिता लङ्कापुरी स्वर्गभूः ।
दग्धस्सर्वसुखास्पदश्च मदनो हा ! हा ! वृथा शम्भुना
दारिद्र्यं घनतापदं भुवि नृणां, केनापि नो दग्ध्यते ॥



राक्षसस्वभावयुता भार्या तस्याः पतिश्च —

" हाः ! पाकं न करोषि पापिनि ! कथं ? पापी त्वदीयःपिता
रण्डे जल्पसि किं ? त्वदीयजननी रण्डा त्वदीया स्वसा ।
निर्गच्छस्व हठान्मदीयभवनात्, नेदं त्वदीयं गृहं,
हा ! विश्वेश्वर ! देहि मेऽद्य मरणं, सूत्रं मदीयं गतम् ॥



असत्यविहारः —

"आदौ ज्यौतिषिकान् प्रणम्य भुजयोरास्फाल्य पौराणिकान्
आलिङ्ग्याथ कवीन् प्रसाद्य भिषजः सम्मान्य कायस्थकान् ।
स्पृष्ट्वा वाखधूः प्रशस्य रजकान्, स्तुत्वा वणिक्सन्ततिं
प्रस्थायाथ सुवर्णकारसदने सानन्दमास्तेऽनृतम्" ॥



# अलाभदीनः

## विद्याप्रवीणः श्री शठकोपः

बहोः कालात् प्राक् चीनदेशे पीकिङ्नामके नगरे कश्चन दरिद्रः सीवकः आसीत्। तस्य अलाभदीनः इति एकः पुत्रः आसीत्। सः पित्रोः आज्ञाम् अपालयन् विद्यालयं अगच्छन् कालं यापयन् आसीत्। तस्य प्रवृत्तिमालोच्य पितरौ अतीव खिन्नौ अभवताम्।

एवं स्थिते तस्य पिता सीवकः मृत्युमाप। सीवकस्य पत्नी महत् कष्टमनुभूय आत्मानम्, अलाभदीनं च कथंचित् पोषयन्ती आसीत्। तदा तस्य वयः षोडशवर्षाणि। अथापि सः वीथ्यां क्रीडासक्तः एव कालं यापयति स्म।

तदा आफ्रिकादेशात् कश्चन मान्त्रिकः तन्नगरम् आगच्छत। पीकिङ्-नगरस्य समीपे कस्मिंश्चित् पर्वते एका गुहा अस्तीति तस्यां गुहायाम् एकः अद्भुतः दीपः अस्तीति, सः यदि लभ्येत तदा स्वयं जगति महान् धनवान् भवितुं शक्यते इति सः अजानात्। किन्तु तं दीपम् आनेतुं कस्यचन साहाय्यम् आवश्यकम् आसीत्। तथाविधे कर्मणि अलाभदीनः एव समर्थः इति निश्चिकाय। तम् आत्मसात्कर्तुम् आलोचयामास।

एकदा सः वीथ्यां क्रीडन्तम् अलाभदीनं दृष्ट्वा सवात्सल्यं भाषणं कृत्वा, आत्मानं तत्पितुः ज्येष्ठभ्रातरं एतावत्पर्यन्तं विदेशेषु भ्रमन्तं अकथयत्। अलाभदीनस्य पितुः मरणमुद्दिश्य नितान्तं दुःखितमिव आत्मानम् अभ्यनयत्। अलाभदीनाय महार्घाणि वस्त्राणि भक्ष्याणि प्रदाय च तेन साकं तस्य गृहं प्रति अगच्छत्।

अलाभदीनस्य माता अपि तं मान्त्रिकं स्वभर्तुः ज्येष्ठभ्रातरम् अमन्यत। सा तं बहुधा उपचचार।

एवं कतिचन दिनानि गतानि। एकदा स मान्त्रिकः अलाभदीनमाहूय-स्वेन साकं तद्वनम् अनयत्। तत्र एकस्मिन् प्रदेशे मन्त्रबलेन अग्निमुत्पादयामास। कतिचन मन्त्रान् जपित्वा किञ्चित् भस्म तस्मिन् प्राक्षिपत्। हठात् तत्र भूमिः द्वेधा भिन्ना अभूत् तत्र महदेकं प्रस्तरकवाटमदृश्यत।

एतत् सर्वं दृष्ट्वा अलाभदीनः भयेन कम्पमानः अभूत्। तं मान्त्रिकः समाश्वास्य तस्य हस्ते एकं मायांगुलीयकं दत्वा तत् शिलाकपाटम् उद्घाटयितुम् आदिशत्। अंगुलीयकस्य महिम्ना तत् कपाटं लघुतया उद्घाटितमभवत्। तदन्तः दीर्घः एकः मार्गः आसीत्।

मान्त्रिकः अलाभदीनम् अवदत् – वत्स! निर्भयम् एतदन्तः गच्छ। मार्गे गच्छन् त्वं बहुविधान् तरुगुल्मान् द्रक्ष्यसि। तेषु जाज्वल्यमानानि फलानि लम्बमानानि दृश्येरन्। तानि अस्पृष्ट्वा ऋजुतया गच्छ। गुहायाः अन्तिमे प्रदेशे एकस्मिन् स्थले एकः दीपः ज्वलन् वर्तेत। तं गृहीत्वा निर्वाप्य सावधानतया आनय। यदि अभिलाषः स्यात् आगमनवेलायां फलानि अवचित्य भक्षय। दीपं यदि आनेष्यसि आवामुभावपि महान्तौ धनिनौ स्याव इति।

तस्याः गुहायाः अन्तः गन्तुम् अलाभदीनः बिभेति स्म। अथापि पितृव्यः ताडयेत् कच्चित् इति भीत्या तदन्तः प्रविश्य मान्त्रिकोक्तप्रकारेण तं दीपम् आनयत्। आगमनसमये मार्गस्थवृक्षेभ्यः फलानि अवचित्य स्वभस्त्रायां निचिक्षेप। तानि खादितुमनर्हाण्यासन्, यतः तानि प्रस्तरमयानीव कठिनान्यासन्।

सः द्वारदेशपर्यन्तमागच्छत्। तत ऊर्ध्वम् आरोढुम् नापारयत्। सः पितृव्यम् आहूय आत्मानम् उद्धर्तुं प्रार्थयामास। मान्त्रिकः दीपं प्रथमतः देहि इत्यवदत्। अलाभदीनः तथा कर्तुं नांगीचकार। मां प्रथमतः उद्धर इत्यवदत्। मान्त्रिकः – दीपं प्रथमं यदि दास्यसि तदा उद्धरिष्यामि इत्यवादीत्। एवं परस्परं ब्रुवतोः तयोः मान्त्रिकः क्रुद्धः गुहायाः शिलाकपाटं पिधाय अधावत्।

अलाभदीनः गुहायां बद्धः चीत्कारम् अकरोत्। तस्य दुःखस्य श्रोता नकोऽप्यासीत्। सः तत् दिनं सर्वं तत्रैव अयापयत्। सायं शोकाकुलः भूमौ पपात।

दुःखेन अवयवान् संघट्टयामास। तदा तस्य हस्तस्थितम् अंगुलीयकमपि संघट्टितमभूत। तदा तस्मात् अंगुलीयकात् हठात् कश्चन भूतः समुद्भूत्। सः अवदत् – भोः ! अहम् अस्य अंगुलीयकस्य सेवकः । तव किम् आवश्यकम् ? इति। सः प्रथमं बिभेति स्म। किन्तु धैर्यम् अवलम्ब्य – भो भूत ! माम् इतः मम मातुः सविधं नय इत्यवदत्। सोऽपि तथैव अकरोत्।

अलाभदीनः वृत्तं सर्वमपि स्वमात्रे निवेदयामास। सा स्वपुत्रः कथञ्चित् दिष्ट्या सप्राणः आगच्छत् इति भगवन्तं प्रशशंस।

एकदा आलाभदीनस्य गृहे आहारः ईषदपि नासीत्। तस्य माता तं दीपं विक्रीय धनम् आनेतुं पुत्रम् आदिदेश। सोऽपि तथैवेत्युक्त्वा दीपं यावत् पेटिकातः उन्नयति तावत धूळिरूषितः मलिनः अदृश्यत। तस्य माता तं दीपं सम्यङ्मार्जयित्वा दास्यामीत्युक्त्वा मार्जयामास। आश्चर्यम् – हठात् महाकायः भूतः उद्भूय तयोः पुरतः अतिष्ठत्। अहम् अस्य दीपस्य सेवकः, तव किम् आवश्यकं वद – इत्यवदत। तं दृष्ट्वा अलाभदीनस्य माता मूर्छिता भूमौ अपतत्। किन्तु अलाभदीनः नाबिभेत्। स तं दीपं स्वयं गृहीत्वा – झटिति अस्माकं कृते समीचीनम् आहारं सज्जीकृत्य आनय – इत्यादिदेश। स भूतः क्षणेनैव सर्वं सिद्धमकरोत। सुवर्णपात्रेषु महार्हं आहारं परिकल्प्य अदात्। अलाभदीनः मातरम् उत्थाप्य समाश्वासयत्। तौ तमाहारम् अभुक्ताम्।

अलाभदीनः प्रापंचिकज्ञानं सम्पाद्य क्रमशः महान् धनिकः अभवत्। नागरकाः सर्वे अपि तं पूजयामासुः।

एकदा सः तत्रत्यराजकुमारीं यादृच्छिकतया अपश्यत। तां परिणेतुं च ऐच्छत। गुहायां पूर्वम् अवचितानि फलानि रत्नफलानीति इदानीं सः अजानात। तानि एकस्मिन् सुवर्णपात्रे निक्षिप्य स्वमातुः हस्ते दत्वा राज्ञः उपढौकनरूपेण प्रेषयित्वा स्वस्य अभिप्रायमपि निवेदयितुम् अचोदयत्।

राजा तानि दृष्ट्वा राजा दिग्भ्रांतः सन् अलाभदीनाय स्वकन्यां दातुम् अङ्गीचकार। किन्तु विवाहात् प्राङ्महान्तमेकं प्रासादं कारयितु मादिदेश।

अलाभदीनः पूर्ववत् दीपं संघृष्य भूतमुत्पाद्य प्रासादमेकं रचयितुमादिदेश। तदानीमेव तं निर्माय स भूतोऽप्यगच्छत।

तत् दृष्ट्वा राजा आश्चर्यान्वितः अलाभदीनाय कन्यां दत्वा विवाह-महोत्सवम् अकरोत्। तौ दम्पती सुखेन कतिचन दिनानि अत्यवाहयताम्।

एवं सति अलाभदीनः गुहातः पलायितः राजभोगमनुभवन् अस्ति इति स मायावी क्रमशः अजानात्।

सः अलाभदीनस्य अनुपस्थितिसमये तस्य प्रासादसमीपमागत्य दीप-विक्रेतुरिव वेषं परिकल्प्य राजवीथ्यां – 'पुराणदीपानां परिवर्तनेन नूतनदीपान् कः अपेक्षते ?' इति उच्चैः अघोषयत्। वीथ्यां स्थिताः बहवः आगत्य स्वस्व-दीपान् दत्वा नूतनदीपान् अगृह्णन्। अलाभदीनस्य भार्या अपि तं मायादीपं तस्मै विक्रेत्रे दत्वा नूतनं दीपम् एकम् अगृह्णात्।

स मायावी महता सन्तोषेण तं गृहीत्वा अघृष्यत्। यथापूर्वं भूतः आविरभूत्। स तम् अवदत् – भोः ! अलाभदीनस्य प्रासादं समूलम् उत्पाट्य आफ्रिकादेशेस्थितम् अस्मन्नगरं नीत्वा स्थापय' – इति। भूतोऽपि तथैव अकरोत्।

राजा इमं वृत्तान्तं विज्ञाय अलाभदीनाय चुकोप। एवं छद्मना स्वकन्याम् अपाहरत् इति दोषारोपणं च कृत्वा तं हन्तुं प्रायतत। तदा सः बहुधा सम्प्रार्थ्य राजकुमारीम् अन्विष्य आनेतुम् एकं मासम् अवधिं अयाचत। राजापि कथमपि अङ्गीचकार। अलाभदीनः बहिर्गत्वा स्वहस्तस्थितम् अंगुलीयकम् अघृष्यत्। पूर्ववत् भूतः समुदभूत्। "अनुपदं मम भार्या यत्र अस्ति मामपि तत्र नय" इति भूतम् आदिदेश। सोऽपि तथैव तं तत्र अनयत्।

अलाभदीनः तत्र रहस्यतया भर्याम् उपगम्य मायाविनं विषप्रयोगेण मारयितुम् आदिदेश। सा अपि मायाविनि प्रेमभावादिकं प्रकटय्य भोजनवेलायाम् अन्ने विषं प्राक्षिपत्। तेन सः मृतः।

अनुपदम् अलाभदीनः प्रासादान्तः प्रविश्य तं मायादीपम् अन्विष्य तं गृहीत्वा भूतमुत्पाद्य – अयं प्रासादः पूर्वं यत्र आसीत् तत्र नय इत्यादिदेश। भूतोऽपि तथैव चकार। स्वसुतां सजीवां दृष्ट्वा परमानन्दभरितः राजा अलाभदीनं मर्षयित्वा पूर्ववत् तस्मिन् प्रीतः अभवत्। अलाभदीनः ततः प्रभृति तं मायादीपं स्वग्रीवायामेव बद्ध्वा सावधानतया परिपालयन् सुखेन कालं यापयन् आसीत्॥

( आरभ्यकथाधारेण )

# अत्र धनं नाम धर्म एव दानमेव

"साहित्यभूषणम्" पडाल ब्रह्मारेड्डिः,
कोंकुदुरु, पूर्वगोदावरी.

---

आसीत् काञ्चनपुरी नाम नगरी। तत्र आनन्दवर्द्धनो नाम कश्चिन् निर्धनः असीत्। बहुलौकिकविषयज्ञः सः सर्वत्र यद् घटयिष्यते, तत् प्रथमतः ज्ञात्वा सर्वेभ्यः कथयन् ईषत् ईषद्धनमर्जयति स्म। तस्या नगर्याः सर्वे धनिकाः तस्य घनिष्टपरिचिता आसन्। अद्य स एकस्य धनिकस्य गृहे भुङ्क्ते, तर्हि परेद्युः कस्यचिदपरस्य। लौकिकान् विषयाननेकानुक्त्वा धनिकान् सन्तोषयन्नासीत् सः। इत्थं निर्धनोऽपि आनन्दवर्द्धनो जीवनं सुखेन यापयति स्म।

एकदा तेन शयनसमये मनसि एवमालोचितम् – "परगृहे भक्षणं नाम बहुदुःखकरम्, यतः तत्र स्वेप्सितपदार्थान् उदरपूरं भक्षयितुं न शक्नुमः। सम्पन्नानामेव गौरवं कीर्तिश्च सम्भवति। दरिद्रास्तु धनाभावाद् बहुकष्टग्रस्ताः परिश्रमं कुर्वन्तोऽपि ईप्सितपदार्थभक्षणे असमर्था भवेयुः। किञ्च बहवो धनिनो धनव्ययभिया स्वेप्सितपदार्थभक्षणे असमर्थाः सन्तः मितम्पचत्वं कुर्युः। एवञ्च लक्षाधिपतयः कोट्यधिपतयश्च भाग्यवन्तः, ये निर्भयं स्वेप्सितान् पूरयितुं पारयन्ति। अतः यथाऽहं धनिकः भवेयम् तथा यतेय। किञ्च धनिको भूत्वाऽहं यशः गौरवञ्च प्राप्स्यामि" इति।

परेद्युः आनन्दवर्द्धनः किंचिदरण्यं गत्वा एकं महर्षिमपश्यत्। प्रणम्य स महर्षिं सादरमपृच्छत् – "कृपया मां सम्यक् सूचयतु भवान् अहं प्रभूतं धनं लब्धुं कां देवतामधिकृत्य तपश्चरेयम्?" इति।

महर्षिः प्रत्यभाषत – "त्वं तपो नाम क्रीडां अवगच्छसि किम्? त्वादृशा लौकिकभोगाभिलाषिणाऽपि तपः साध्यं वा न वेति अज्ञात्वैवेत्थं ब्रवीषीति विचित्रम्"।

आनन्दः – "भत्सामर्थ्यमज्ञात्वा मामित्थं नोपहसितुमर्हति भवान्। यदि प्रभूतं धनं लब्धु किंचित् तपो वर्तते, तर्हि अहं सर्वं कष्टं सहिष्ये। अतः तत्तपः सूचयित्वा मां कृतार्थतु भवान्"।

महर्षिः – सुष्ठु वर्त्तते! यदि त्वं घोरं तपश्चरितुं पारयसि, तदा तथा कृत्वा मोक्षं लभस्व। मुक्तिम् ऋते संसारेस्मिन् किं श्रेष्ठं वस्तु वर्त्तते? मुक्ति-लाभायैव स्तवः, पूजा तपश्चाचरणीयानि। परन्तु अनित्याय धनाय त्वं तपस्तप्तुं किमर्थमिच्छसि? इतोऽपि अधिकज्ञानं तव नास्तीति मया उपदिश्यते। अत एव त्वया मुक्तिलाभायैव तपश्चरणीयम्।

आनन्दः – "लौकिकानां तु धनमेव श्रेष्ठम्। धनेनैव स्वेप्सितान् सर्वान्, गौरवं, यशश्च लभन्ते इति मम विश्वासः। मम विश्वासोऽयं भवतः दृष्टौ यद्यपि मूर्खतात्वेन प्रतीयते, तथापि धनमेवाप्तुं तपः उपदिश्यानुग्राह्योऽयं जनः"।

महर्षिः – "शतकृत्वः उपदेशे दत्तेऽपि मूर्खः स्वाज्ञानं न त्यजेत्। नित्यां मुक्तिमचिन्तयित्वा धनायैव स्पृहयसीति बलवत्तरः खलु भगवन्महिमा! यदि धनमेवाप्तुमिच्छसि, तर्हि लक्ष्मीमधिकृत्य तपश्चर"।

आनन्दः – "अहमवश्यं भवतोपदिष्टां देवतां लक्ष्मीमधिकृत्य फलसिद्धिं यावत् तपश्चरिष्यामि"।

ततः महर्षेराश्रमात् प्रतिनिवृत्य काञ्चनपुरीं गतः सः। सर्वेभ्यो धनिकेभ्यः स्वाभिप्रायं कथयित्वा तस्मिन् दिने त्रिः उदरपूरं भोजनमकरोत्। धनिकानापृच्छ्य कस्मिंश्चित् घोरे वने निभृतस्थानमगच्छत्। तत्र देवीं लक्ष्मीमाधिकृत्य घोरं तपश्चरितुमारभत। पञ्चसु वर्षेषु व्यतीतेषु आनन्दवर्द्धनस्य महता तपसा प्रसन्ना लक्ष्मीराविरासीत्। भगवत्याः लक्ष्म्याः दर्शनेनात्मानं धन्यं मन्यमानः आनन्द-वर्द्धनः स्तुवन् प्राणमत्।

लक्ष्मीः – "तव तपसाऽहं प्रसन्ना सञ्जाता। किंचिद्वरं वृणीष्व"।

अनन्दः–"अतिनिर्धनोऽहं स्वजिहवाचापल्यम् भवत्याः कृपया सफलीकर्तु-मिच्छन् किंचिद् वृणोमि। तदवश्यं प्रदाय मामनुगृह्णातु अत्रभवती। अहं

यथा सर्वधनिकापेक्षया धनिकवरो भवेयम् तथा करोतु भवती, किञ्च मम धनमक्षयं भवेत्" ।

लक्ष्मीः – "त्वं तु वरद्वयं वृणोषि । प्रथमं अतिधनिकवरो भवितुं द्वितीयञ्च तद्धनस्याक्षयत्वञ्च । वरद्वयप्रदानं तु असम्भवम्" ।

आनन्दः – सर्वशक्तिसम्पन्नायाः भवत्याः असम्भवं नाम किं भवेत् ? यद्यपि भवत्या दत्तेन वरेणाहं कुबेरापेक्षया धनिको भवेयमिति मन्यताम्, तथापि तत् चिरस्थायी न स्याच्चेत्तर्हि तेन किं प्रयोजनम् ? किञ्च यदि धनस्याक्षयत्वं वरिष्यामि, तदा ममापेक्षया बहवो धानिकवरा भवेयुः, येषामग्रे भवत्याऽनुगृहीतोऽहं कथमिव धनिकवरोऽहमिति वक्तुमर्हः ? किञ्चाहं बहून् धनिनः आश्रयम्, ये धनव्ययभिया स्वेप्सितान् सफलीकर्तुमसमर्थाः । अत एवाहमेकमेव वरं तथा द्विधा वृणोमि । अतः यथाकथञ्चित् तत्प्रदानेनानुग्राह्योऽयं परिजनः" ।

लक्ष्मीः – "तव वचः उल्लङ्घितुमपारयन्त्या मया कंचिद् प्रतिबन्धं कृत्वा वरद्वयं दीयते । त्वं धनमक्षयत्वात् जलमिव व्ययये: । अतः त्वया यत् क्रेष्यते, तत् कुत्रापि त्वया क्रीतमूल्यापेक्षया स्वल्पमूल्येन अलभ्यं भवेत । प्रतिबन्धेनानेन विना सर्वान् विक्रयिणः धनिनः कुर्याः वरेणैव। अपि च यदि तवेच्छा वर्तेत तर्हि, निर्धनेभ्यो याचकेभ्यः एव त्वया धनं देयम्" ।

आनन्दः – प्रतिबन्धानिमान् सानन्दं स्वीकरोमि। वरद्वयमेवावश्यं ददातु अत्रभवती" ।

"त्वं मयोक्तरीत्या ददासि आहोस्विद् व्ययसि चेत कदापि धनं क्षयं नाप्नोति, नोचेद् व्ययितानि धनानि महार्हरत्नधनपरिपूर्णायाः अस्याः पेटिकायाः व्यपगच्छेयुः, किञ्च पेटिकामिमां कश्चिदप्यपहर्तुं न पारयति। त्वं चिरकाल यावद् धनिकवरत्वादि"त्युक्त्वा भगवती लक्ष्मीरासीदन्तर्हिता ।

आनन्दवर्द्धनः पेटिकां स्कन्धेन वहन् काञ्चनपुरीं प्रत्यागच्छत् । सर्वे-मुदन्तं श्रुत्वा तन्नगरवासिनः आनन्दवर्द्धनस्य परिश्रमं फलञ्च प्राशंसन् । यदा कस्यचिद् विक्रेतुराराव श्रृणोति, तदा आनन्दवर्द्धनः तमवश्यमाहूय यथाकथञ्चिद-

भूतपूर्वस्वल्पमूल्येन तद् वस्तु आत्मने दातुं बहुसमयपर्यन्तं संल्पति स्म। अन्ततो गत्वा विक्रेताऽसौ यदि कुत्रापि इतोऽप्यल्पमूल्येन विक्रेष्यते, तदा पेटिकायाः व्ययितं धनमूर्नानवेत किं वेति भिया आनन्दवर्द्धनः किंचिदपि न क्रीणाति स्म। विक्रयिणस्तु तस्य जिह्वालोलुपस्य स्वभावं ज्ञात्वा मुधा समययापनभिया तेनाहूता अपि नागच्छन्ति। अहमात्मोदरपोषणायापि धनेन किंचिदपि न क्रीणामि खल्वेवं स्थितौ याचकेभ्यो निर्धनेभ्यश्च किमर्थं धनं दद्यामिति दानतः अपि व्यरमत स मूर्खः। पुरा ये धनिनः तस्मै भोजनादिकं दयया ददति स्म, तान् किमिति भोजनदानाय याचेत स धनिकवरः? उपवसन्नपि जिह्वालोलुपः आनन्दवर्द्धनो न धनेन किंचिद् क्रीणाति, न च याचकेभ्यः किंचिद् ददाति। ततः बुभुक्षा-पीडितः आनन्दवर्द्धनः अम्रियत।

यदा आनन्दवद्र्धनस्यात्मा यमलोकमाजगाम, तदा तत्रस्थे स्वयातनाशरीरे तस्यात्मा प्रविवेश। यावत स उदतिष्ठत्, तावदेव तस्य हस्ते धनपेटिकाऽपि अविरासीत्। ततः स क्षुधा नितान्तं पीडितः सन् निकटवर्तिभक्ष्यपदार्थशालाः अगच्छत्। तत्र भूलोकदुर्लभाणि बहूनि मधुराणि फलानि भक्ष्याणि च दृष्ट्वा पेटिकायाः धनं गृहीत्वा अब्रवीत् – "धनमेतद् गृहीत्वा मदीयां क्षुद्बाधां कृपया शमयतु भवान्" इति। विक्रेता प्रत्यवदत् – "किमेतत? कर्गजपूगान् दत्वा फ़लानि भक्ष्यपदार्थान् चाप्तुं त्वया मुधा प्रयस्यते? अत्र धनं नाम धर्म एव, दानमेव, नान्यत। यः भूलोके धर्मं कृतवान्, स एवात्र विना मूल्यं उदरपूरं भक्ष्याणि भक्षयितुं शक्नोति सर्वदा, नान्यः। अत्र तु तव धनपत्राणि तृणानि मन्यन्ते। त्वया ईषदपि धर्मः दानं वा न कृतमतः त्वमत्र भक्ष्यमेकमपि प्राप्तुं न शक्नोषि" इति।

ततः आत्मनः वृत्तं स्मृत्वा आनन्दवर्द्धनः भृशं व्यषीदद् आरोदीच्च। विक्रेतारः सर्वे प्रथम इव धनेन किंचिद् दातुं नांगीकृतवन्तः। तदा बुभुक्षया भृशं व्याकुलः आनन्दवर्द्धनः अनुतपन् धनपेटिकां दूरमक्षिपत॥



# सुलभपाठमाला १५

## सर्वनामशब्दाः (यत् - तत् - किं शब्दप्रयोगाः)

यः पठति सः पूज्यः भवति। या गुणवती सा पूज्या भवति। यत् फलं मधुरं भवति तत् जनाः वांछन्ति। यस्मै यत् रोचते तस्मै तत देयम्। यस्यै यत् देयं तस्यै तत् दातव्यम्। यस्मात् इदं गृहीतं तस्मै प्रत्यर्पणीयम्। यस्याः इदं गृहीतं तस्यै प्रत्यर्पणीयम्। यस्य शक्तिः अस्ति सः जयति। यस्याः पतिः अनुकूलः भवति सा सन्तोषं अनुभवति। यस्मिन् पुरुषे पराक्रमः अस्ति सः जयति। यस्यां नार्यां पातिव्रत्यमस्ति सा पूज्या भवति। येषां मनुजानां ऋणं अस्ति ते दुःखिता भवन्ति। येषां फलानां मूल्यं अधिकं भवति तानि जनाः न क्रीणन्ति। यासां स्त्रीणां लज्जा वर्तते ताः शोभन्ते।

कः अयं? का इयं? किं इदं? के इमे? काः इमाः? कस्मै धनं दातव्यम्? कस्यै अयं हारः दातव्यः? अयं कस्य पुत्रः? अयं कस्याः पुत्रः? कस्मात् जनात् इदं आनीतम्? कस्याः स्त्रियः एत गृहीतम्? कस्मिन् जने तव भक्तिः अस्ति? कस्यां लतायां पुष्पाणि वर्तन्ते?

**अवधेयम्** — यत्-शब्दस्य प्रायशः तच्छब्दापेक्षा वर्तते। किंशब्दस्तु प्रश्नार्थे एव उपयुज्यते। शब्दरूपाणि तु सर्व-सर्वाशब्दवदेव। किं शब्दस्य चित, चन, अपि इत्यव्ययैः योगे अनिर्दिष्टार्थकता भवति। यथा - कश्चित् कश्चन कोपि वा पुरुषः। केचित्, केचन केपि जनाः। काचित्, काचन, कापि वनिता। कस्मै चित कस्मै चन कस्मै अपि जनाय दातव्यम्। कस्यां चित, कस्यां चन, कस्यामपि बलिकायां वात्सल्यं भवति गुरोः॥





# राजाजीकथा १५

## शुक सन्देशः



( आ. वरदराजः )

सर्वव्यापी भगवान् सर्वेश्वरः कथं अतिसंकुचिते विग्रहे लिङ्गे वाऽधिष्ठानं प्राप्नुयात् ? मूढाः "वयं वैष्णवा यूयं शैवा" इति मतिभेदेन मतभेदेन च विग्रहाराधानं कुर्वन्ति – इत्याह कश्चिद्वायसः । प्रायशो वायसा वयसा वृद्धा भवन्तीति चिरजीविशब्दादवगम्यते ।

देवालयप्राकारकुड्यमधितिष्ठतः काकस्येदं वाक्यं श्रुत्वा तत्रत्यः कश्चिच्छुकः प्राह - सर्वत्र व्याप्य वर्तमानो हि भगवान् तस्मिन्नपि विग्रहे स्यादवश्यं, तत्र नास्तीत्यत्र किं प्रमाणम् ? अथ कथञ्चिदपि वा न स्यात् तर्हि सर्वव्यापकत्वस्यैव भङ्गः ।

केनाप्युक्तं (तर्किकेण) श्रुत्वा ब्रूषे शुकभाषितं सार्थकयन् - इति प्रत्याह काकः ।

शुकः परिभवं प्राप्तः, कस्यचित् चिक्रोडस्य (उडुत-आन्ध्रयां) पार्श्वं गतस्समुपविष्टः, तस्मै स्वसन्देहं निवेदितवांश्च ।

स काकस्तावत् एको वितण्डावादी, तस्य वाचालतां मा नाम गणय । अपि तु, ममापि खल्वस्ति कश्चित्सन्देहः - इत्याह चिक्रोडः ।

कस्तव सन्देहः ? इत्यपृच्छत् शुकः ।

देवः एको वा अनेको वा ? - इत्यप्राक्षीच्चिक्रोडः ।

"एक एव । तत्र कस्संशयः" - इत्याह शुकः ।

"तर्हि गृहीतोऽसि, बद्धोऽसि" - इति प्राह चिक्रोडः ।

"कुतः कथं वा ? " - इति भीतभीतः शुकः पप्रच्छ ।

"पश्याऽधः, ततः कश्चिन्मार्जारस्समायति; तं पृच्छ-इत्याह चिक्रोडः ।

भीतोऽस्मि, तत्समीपं गन्तुमेव - इत्याह शुकः ।

"भीतो भ्रान्तचित्तो वा कथं विजानीयात? शनैश्शनैर्धैर्यं स्थैर्यं चास्थाय अन्तिकं गत्वा पृच्छ"।

मा मा मातुल! मा मा। मार्जारस्य अन्तिकं गतस्यैव सतो मे सन्देहः, देहात्प्राणाश्च युगपदन्तं गच्छेयुः। अतस्त्वमेव ब्रूहि "त्वं खलु तस्य तादृशस्य तथाभूतस्य श्रीरामचन्द्रस्य सेतुबन्धनसमये साह्यं विहितवानसि इति श्रूयते" इत्याह शुकः।

चिकोड्स्सन्तुष्टः। "अस्तु नाम, ब्रवीमि तावत् शृणु" इति प्रवक्तुमुपचक्रमे।

विग्रहाराधनं चेदभीप्स्यते तर्हि लोके यावन्तो देवालयास्सन्ति तावन्तो देवास्सन्ति इत्यभ्युपगतं भवति। एको हि देवोऽनेकस्सन् बहुधा भिद्येत। इदमियन्मात्रं कथं वा न गणयसि त्व" मित्याह चिकोडः।

अहं पुनरशुकः, केन वा गुरुकुले नाऽहं शिक्षितः? कथमहं गणितप्रक्रियां विजानीयाम्? - शुकः सप्रश्रयमुक्त्वा ततस्स्थानादुत्पत्य गतः।

घासाच्छादिते भूतले काचित् तितलिका (सीताकोकचिलुक आन्ध्रयां) दृष्टा। शुकस्तस्यास्समीपं गत्वोपविष्टः।

"हे कीटक! जगन्नाटककीलक! सर्वज्ञोऽसि, सर्वगतश्चासि"। (बाक्टीरिया रूपेण क्रिमिकीटकजातेः सर्वव्याप्तिर्विश्रुतैव)-इत्याह शुको महर्षिरिव।

"बाढं, यथोक्तोऽस्मि, किमिच्छसि त्वं मत्तो ज्ञातुं? का ते विचिकित्सा? - इत्यपृच्छत्तितलिका।

एक एव देवः कथं सर्वेष्वप्यालयेषु बहुरूपैर्विद्यते विद्योतते च। किमेकमेव फलं बहुरूपं भवितुमर्हति? - इति पृष्टं शुकेन।

"शुकस्य सर्वज्ञता हि फलान्यधिकृत्यैव" इत्युक्त्वा तितलिका ईषदन्तर्बहिर्जहास।

मा हस मा हस तितलिके! न किमपि सुबोधं मे। संदेहो मां सदेहं दहतीव। शिरो विदीर्यत इव। ब्रूहि, यच्च किञ्चित् यत्किंचित्। सर्वं खलु विदितं ते - इत्याह शुकः।

हे शुक! पश्यादः किं दृश्यते उपरिष्टात्? - इत्यपृच्छत् तितलिका। उपरिष्टात् ज्योतिषां पतिर्दिनमणिः दृश्यते - इत्याह शुकः। अधस्तात् पश्य। तस्य वृक्षस्याधः किमस्ति? किं दृश्यते? - पृष्टं तितलिकया।

साक्षात्पाठशालाध्यापकवत् तया तितलिकया भाषितम्। शुकोऽपि बालवत् सभीतिश्रद्धं सप्रश्रयं मन्दं मन्दं सर्वेषां प्रश्नानां समाधानानि प्रयच्छन्नासीत्।

"पत्राणां चलच्छायाः, तन्मध्यपतिता आतपबिन्दवश्च दृश्यन्ते" - इत्याह शुकोऽपि।

"ते आतपबिन्दवः भूतले कुतः कथं आपतिता" – इत्यपृच्छत् तितलिका।

सूर्यादित्याह शुकः।

पश्य, इदानीं तान् गणयामि यावत् - इत्युक्त्वा तितलिका उत्पत्योत्पत्य गत्वा तेषां आतपबिन्दूनां उपर्युपरि पुनः पुनः उपविश्योत्थाय - एकं, द्वे, त्रीणि - इति अष्टोत्तरशतं गणयामास।

"आं, ज्ञातं, विषयो विदितः। एक एव सूर्योऽधस्तात् भूतले छायायां अष्टोत्तरशतसंख्यया प्रभूतः" इति शुकोऽप्रयत्नं समवदत्।

बाढं, एवमेव स एकोऽपि अष्टोत्तरशतं भवति, अष्टोत्तरशतसहस्रमपि वा भवति। वृक्षे पत्राणां मध्ये ये यावन्तो वाऽवकाशाः सन्ति तत्तावत्संख्यया सूर्यः प्रगुणितः प्रकाशते। एकैकस्य कृते एकैको देवः, एकैकस्मिन्नालये एकैको देवः। ये यथा तं प्रपद्यन्ते तेषां तथैव स भगवान् नानारूपेण परश्शतसहस्रं भवति - इत्युक्त्वा तितलिका स्वप्रवचनं समापयामास; यथागतं गता च। शुकोऽप्यमितं विस्मितः। कस्यापि कदापि कथञ्चिदपि अपकारमकुर्वन् अद्वेषभावेन पुष्पात्पुष्पं गच्छन् शनैश्शनैः मधु संगृह्णन् जीविकां निर्वहन्ति किल भ्रमराः। अत एव ननु अनया माधुकर्या वृत्त्या पुष्पजीवी कीटकः प्रज्ञावानासीत्।

"अहमेव खलु पुष्पाणां पुष्परसोऽस्मि; मां सेवमानः कीटकः ज्ञानी भवतीत्यत्र किमाश्चर्यम्?" - इति भगवान् श्रीकृष्णः शुकमुपसृत्य तत्कर्णे रहस्यं विभूतियोगस्य श्रावयामास।

"अहमस्मि यदस्तीह नाऽन्यन्मत्तोऽस्ति किञ्चन" "यच्च किंचिज्जगत्यस्मिन् व्याप्य नारायणोऽस्म्यहं" - "ध्यायतां दिदृक्षूणां यथातथं अहं नानारूपेण संभवाम्यात्ममायया" इति श्रीकृष्णः परमात्मा शुकं प्रत्याह। तस्य सन्देहो विदेहतां गतः निवृत्तः॥



# न मातुः परदेवता

रचयिता — आर्षविद्याभूषणम्, जटावल्लभः पुरुषोत्तमः एम्. ए.,
( विजयवाटिकाकाशवाणीसौजन्येन )

माता देववत्प्रतिपूज्येति श्रूयते। मातृदेवो भव इत्यादितैत्तिरीयोपनिषद्वाक्येषु अग्रतः स्थितत्वात् मातृदेवो भव इत्यस्य प्राधान्यमिष्यते। अत्र क्रमिकत्वमविवक्षितमिति न वक्तव्यम् वक्ष्यमाणकारणबाहुल्यात्।

न केवलं मातृर्दैवत्वं, किन्तु देवतानामपि मातृत्वं वेदेषु दृश्यये। वाजसनेयसंहितायां "यस्ते स्तनः शशयः" इत्यत्र स्वीयस्तन्यप्रदानेन प्रजाः पोषयन्ती देवता सरस्वती प्रस्तुता "स्याम मातुर्न सूनवः" इत्यादि ऋग्वेदमन्त्रे अदितेर्देवतायाः मातृत्वं तदाराधकानां पुत्रत्वं च परिकल्पितम्। "संगीतं चैव साहित्यं सरस्वत्याः स्तनद्वयम्" इत्यादिलौकिककल्पनास्वपि सरस्वत्यादिदेवतानां मातृत्वं तद्भक्तानां पुत्रत्वं च दृश्यते। एवं मातुश्च देवतानां च रूपकोपमानकल्पनासु मातुः पित्राद्यपेक्षया परदेवतात्वं सिद्ध्यति।

दयामयत्वं यद्भगवल्लक्षणं तस्य साकल्येन मातरि दृश्यमानत्वात् मातुर्देवत्वमुपपद्यते। "उशतीरिव मातरः" इत्यादिमन्त्रे अब्देवतानां प्रेमपूर्णत्वलक्षणे मात्रुपमानं दृश्यते। बन्धुत्वनिमित्तकं यत्प्रेम वर्तते भ्रातुः भ्रातरं प्रति वा, भर्तुः भार्यां प्रति वा, अन्यतरबन्धोः अन्यतरबन्धोः अन्यतरबन्धुं प्रति वा – तस्य प्रेम्णः लोके अव्यभिचारित्वं न दृश्यते। किन्तु मातुः पुत्रं प्रति प्रेम सर्वदा अनपायि। उक्तं च आचार्यशंकरेण "कुपुत्रो जायेत क्वचिदपि कुमाता न भवति" इति।

मनुष्येतरप्राणिनामपि मध्ये मातुः स्वीयापत्ये प्रेम दृश्यते, यत्र पितृभातृस्वसृमातुलभागिनेयत्वादिबन्धुत्वनिमित्तकं प्रेम न दृश्यते। केचन जन्तवः स्वीयापत्यपोषणार्थं बहुक्लेशमनुभवन्ति। सन्ति च केचन तिर्यञ्चः ये स्वीयापत्यहिंसकान् मानवान् विदारयन्ति। एतादृशी विशिष्टता मातृप्रेम्णः सर्वेष्वपि भूतेषु।

महाकविभिर्बहुधा वर्णितः मातृहृद्गतः प्रेमविशेषः "वियत्स्थे नक्षत्राणां परिगणनं शक्यते; समुद्रस्य गभीरतापि मानयोग्या; सैकतस्थ वालुका अपि गणनार्हाः; किन्तु मातृहृदयस्थस्य प्रेम्णः इयत्ता ज्ञातुं न शक्यते"।

माता सर्वेषां परमाश्रयः कीर्त्यते —

**"यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।**
**तथा गृहस्थमाश्रित्य सर्वे जीवन्ति मानवाः" ॥**

एवं सुखस्थानत्वान्मातुः स्वर्गसादृश्यम् । "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" इति श्रीरामायणे रामचन्द्रवचनम् । नैतच्चित्रं यत्कष्टकाले, वेदनानुभवावसरे सर्वैर्माता स्मर्यते इति ।

जन्महेतुत्वं यद्भगवल्लक्षणं तस्यापि मातरि दृश्यमानत्वात् मातरि देवत्वापादनमुपपन्नम् । न केवलं तनुकारकत्वं किन्तु चित्तवृत्तिकारकत्वमपि दृश्यते मातुः । गर्भस्थस्य प्रह्लादस्य विष्णुभक्तिः दैवसंपत्तिश्च मातुः चित्तसंस्कारविशेषादेव इति ज्ञायते । बहवः ऐतिहासिकपुरुषाः स्वीयमातृदेवताप्रसादेनैव आध्यात्मिकौन्नत्येन सुविख्याताः ।

मातुरसदृशपूज्यत्वस्य इदमेव निदर्शनं यत् लोके पूजार्हाणि बहूनि वस्तूनि मातृपदघटितशब्दैः व्यवह्रियन्ते । गोमाता, गंगामाता, श्रुतिमाता इत्यादिप्रयोगैः सम्यक् सूच्यते मातुः गौरवविशिष्टता ।

एवं माता पूज्यानां मध्ये पूज्येति सिद्ध्यति । आचार्यः, पिता, माता इत्येतत् त्रयं आहवनीयगार्हपत्यदक्षिणाग्न्यात्मकमिति मनुना कीर्तितम् ।

**माता मूर्तिः पृथिव्यास्तु, पिता मूर्तिः प्रजापतेः ।**
**आचार्यो ब्रह्मणो मूर्तिः, त्रय एव त्रिमूर्तयः ॥**

इत्यपि च मनुः । एतेषां तोषणमेव परमं तप उच्यते । धर्मानुष्ठानायापि तेषामनुमतिरपेक्ष्यते । त्रयाणामपि मध्ये मातुः श्रैष्ठ्यम् वर्तते ।

**"उपाध्यायान् दशाचार्य आचार्याणां शतं पिता ।**
**पितॄणां तु शतं माता गौरवेणातिरिच्यते" ॥**

वशिष्ठोपि माता पित्रपेक्षया पूज्यतरेति निर्दिशति "पतितः पिता परित्याज्यः, माता तु पुत्रस्य दृष्टौ न पतति" इति सूत्रे ।

धर्मच्युतः पिता पुत्रेण त्याज्यः, माता तु महापापदूषितापि न त्याज्या ।

पूज्यत्व, दयालुत्व, रक्षकत्वात्मकानां भगवल्लक्षणानां मातरि बाहुल्येन दृश्यमानत्वात् "न मातुः परदेवता" इति सूक्तिरर्थवती ॥



# अन्यायराजप्रहसनम्

## रचयिता — महाकवि श्री व० रामानुजाचार्यः

(पूर्वानुबन्धः)

सप्त स च रूपकेष्वपि कृत्वाऽसौ दशविधेषु कविवर्यः ।
अन्यायराजविषयप्रहसनमेतत् करोति विबुधमुदे ॥

तत् तेनैव इदानीं अभिनेतव्यम्

( नेपथ्ये )

इत इतो महाराजः

सूत्र — (श्रुत्वा) अये, मत्स्यालः परिगृहीतदुष्टदूताख्यप्रतिहारिभूमिकः इत एवागच्छति। तत् आवामपि अनन्तरकार्याय सज्जीभवावः ।

(इति निष्क्रान्तौ)

॥ प्रस्तावना ॥

(ततः प्रविशति दुष्टदूतः)

दुष्ट — इत इतो महाराजः, (इति पुनः पठति)

(ततः प्रविशति अन्यायराजः)

अन्या — अये, दुष्टदूत,

दुष्ट — (सांजलिबन्धं) आज्ञापयतु महाराजः ।

अन्या — अस्मदन्यायराज्यजनकलहक्षेमविचारणाय वधपाताकनामानं अस्मन्मन्त्रिणमानय ।

दुष्ट — तथा। (इति निष्क्रम्य तेन सह प्रविश्य) अयमयं मन्त्री ।

मन्त्री — (राजानं वीक्ष्य, स्वगतं)

वृषभशृंगविभूषणवद्वहन् मकुटमेष नृपोऽत्र विराजते।
विषमपादविलम्बितदण्डवत् करधृतद्विमणीतमहागदः ॥

माता सर्वेषां परमाश्रयः कीर्त्यते —

"यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
तथा गृहस्थमाश्रित्य सर्वे जीवन्ति मानवाः" ॥

एवं सुखस्थानत्वान्मातुः स्वर्गसादृश्यम् । "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" इति श्रीरामायणे रामचन्द्रवचनम् । नैतच्चित्रं यत्कष्टकाले, वेदनानुभवावसरे सर्वैर्माता स्मर्यते इति ।

जन्महेतुत्वं यद्भगवल्लक्षणं तस्यापि मातरि दृश्यमानत्वात् मातरि देवत्वापादनमुपपन्नम् । न केवलं तनुकारकत्वं किन्तु चित्तवृत्तिकारकत्वमपि दृश्यते मातुः । गर्भस्थस्य प्रह्लादस्य विष्णुभक्तिः दैवसंपत्तिश्च मातुः चित्तसंस्कारविशेषादेव इति ज्ञायते । बहवः ऐतिहासिकपुरुषाः स्वीयमातृदेवताप्रसादेनैव आध्यात्मिकौन्नत्येन सुविख्याताः ।

मातुरसदृशपूज्यत्वस्य इदमेव निदर्शनं यत् लोके पूजार्हाणि बहूनि वस्तूनि मातृपदघटितशब्दैः व्यवह्रियन्ते । गोमाता, गंगामाता, श्रुतिमाता इत्यादिप्रयोगैः सम्यक् सूच्यते मातुः गौरवविशिष्टता ।

एवं माता पूज्यानां मध्ये पूज्येति सिद्ध्यति । आचार्यः, पिता, माता इत्येतत् त्रयं आहवनीयगार्हपत्यदक्षिणाग्न्यात्मकमिति मनुना कीर्तितम् ।

माता मूर्तिः पृथिव्यास्तु, पिता मूर्तिः प्रजापतेः ।
आचार्यो ब्रह्मणो मूर्तिः, त्रय एव त्रिमूर्तयः ॥

इत्यपि च मनुः । एतेषां तोषणमेव परमं तप उच्यते । धर्मानुष्ठानायापि तेषामनुमतिरपेक्ष्यते । त्रयाणामपि मध्ये मातुः श्रैष्ठ्यम् वर्तते ।

"उपाध्यायान् दशाचार्य आचार्याणां शतं पिता ।
पितॄणां तु शतं माता गौरवेणातिरिच्यते" ॥

वशिष्ठोपि माता पित्रपेक्षया पूज्यतरेति निर्दिशति "पतितः पिता परित्याज्यः, माता तु पुत्रस्य दृष्टौ न पतति" इति सूत्रे ।

धर्मच्युतः पिता पुत्रेण त्याज्यः, माता तु महापापदूषितापि न त्याज्या ।

पूज्यत्व, दयालुत्व, रक्षकत्वात्मकानां भगवल्लक्षणानां मातरि बाहुल्येन दृश्यमानत्वात् "न मातुः परदेवता" इति सूक्तिरर्थवती ॥



# अन्यायराजप्रहसनम्

**रचयिता — महाकवि श्री व० रामानुजाचार्यः**

(पूर्वानुबन्धः)

सप्त स च रूपकेष्वपि कृत्वाऽसौ दशविधेषु कविवर्यः ।
अन्यायराजविषयप्रहसनमेतत् करोति विबुधमुदे ॥

तत् तेनैव इदानीं अभिनेतव्यम्

( नेपथ्ये )

इत इतो महाराजः

सूत्र – (श्रुत्वा) अये, मत्स्यालः परिगृहीतदुष्टदूताख्यप्रतिहारिभूमिकः इत एवागच्छति । तत् आवामपि अनन्तरकार्याय सज्जीभवावः ।

(इति निष्क्रान्तौ)

॥ प्रस्तावना ॥

(ततः प्रविशति दुष्टदूतः)

दुष्ट – इत इतो महाराजः, (इति पुनः पठति)

(ततः प्रविशति अन्यायराजः)

अन्या – अये, दुष्टदूत,

दुष्ट – (सांजलिबन्धं) आज्ञापयतु महाराजः ।

अन्या – अस्मदन्यायराज्यजनकलहक्षेमविचारणाय वधपातकनामानं अस्मन्मन्त्रिणमानय ।

दुष्ट – तथा । (इति निष्क्रम्य तेन सह प्रविश्य) अयमयं मन्त्री ।

मन्त्री – (राजानं वीक्ष्य, स्वगतं)

वृषभशृंगविभूषणवद्वहन् मकुटमेष नृपोऽत्र विराजते ।
विषमपादविलम्बितदण्डवत् करधृतद्विमणीतमहागदः ॥

(प्रकाशं सांजलिबन्धं)

पाताऽन्यायमहीश्वरो यदि भवेत् भूमेरिदानीं न हि
न्यस्तो मच्चरणो मयाऽपि न भवेदाद्यस्स्वयं भूतले ।
इयंभोजसमुद्भवस्य सदसि प्रस्तौति यं त्वां सदा
सोऽयम्द्यापि कलिर्युगः क्षितिपतिश्रेष्ठाय तस्मै नमः ॥

(इति दक्षिणकरेण स्वशिरः स्पृशति)

**अम्बा** – (मन्त्रिणं वीक्ष्य)

यद्वत् बृहस्पतिमतानुसृतस्सुरेशः
पाति त्रिविष्टपममर्त्यकुलाभिपूर्णम् ।
तद्वद्भवन्मतनिविष्ठमतिः करोमि
राज्यं ह्यहं तदलमद्य तव स्तवोऽयम् ॥

विचार्यतां तावत् असद्राज्यमहाजनकलहदुःखादयः ।

**दुष्ट** – (स्वगतं) अहह असद्राज्यस्य जन्मगुरुः अष्टमशनिरप्यागतः । यत् योगक्षेमादय इति वक्तव्ये कलहदुःखादय इत्युक्तं महाराजेन तदनयोः अनन्तर विप्रलापः श्रोतव्यः ।

**मन्त्री** – (दुष्टदूतं वीक्ष्य) दुष्टदूत,

श्वासश्चेन्निर्गतः पित्रोः सद्यो येतालुताडनम् ।
कुर्वन्ति विगळद्बाष्पस्वपन्त्या अपि मर्दनम् ॥
दासानुदासा दासीनां येऽनिशं ता उपासते ।
एते सन्नीतिमार्गस्था स्सर्वेऽप्यत्रागताः किमु ॥
येऽप्यसंख्यं सुरापानं असकृन्मांसभक्षणम् ।
कुर्वन्ति कैतवं चौर्यं भुवनत्रयमोहकाः ॥
एकेन तिलतुल्येन येऽनृतान्यखिलान्यपि ।
तथ्यानि वितथीकृत्य जयन्त्यपि त आगताः ॥

**दुष्ट** – अन्यायशासनानुसारिणस्सर्वेऽपि सभ्याः समागता एव ।

(ततः प्रविशन्ति यथोक्तसभ्याः)

**सभ्याः** – (सशिरस्स्पर्शं) नमः समन्त्रिणे महाराजाय । [क्रमशः]

# कृपणस्य चरित्रम्

लेखकः – काशीरामशर्मा वैद्यः,
जडचर्ला.



एकस्मिन्नगरे लुब्धपालको नाम कश्चित् कृपणो वणिगासीत् । सः अतीव धनवान् रूपवांश्च । तस्य भार्या कनकांगी रूपवती, शीलवत्यपि । सः कदापि कस्मैचिद् याचकायापि अन्नवस्त्र-धन-धान्यादिषु लवमात्रमपि न ददाति स्म । स्वयमप्यापरितोषं न भुङ्क्ते स्म । दानशीलान् स्वजनानपि स न सहते स्म इति नात्युक्तिः । उच्यते, सः एकं भटं गृहद्वारि नियुज्य, "कस्मा अपि भिक्षुकाय कोऽपि स्वगृहान्न ददातिवति शासनं किल चक्रे इति ।

कदाचिदेकः विप्रः लुब्धपालकस्य गृहमागत्य तत्र द्वारदेशेऽतिष्ठत् । द्वारपालं भटं चापृच्छत् "रे भट, तव स्वामी अस्ति वा ? तं आह्वय । अहं तस्मै किंचित् धनं दातुमिच्छामि " इति । द्वारपालोऽन्तर्गत्वा स्वामिनं प्राह, "भोः स्वामिन्, कश्चिद्ब्राह्मणः गृहद्वारि तिष्ठति । तुभ्यं धनं दातुमिच्छति किल । सः त्वामाह्वयति । " लुब्धपालकः एतत श्रुत्वा विस्मितोऽभवत् "किम् ब्राह्मणः मह्यं दित्सति ? इति । " ब्राह्मणः पूज्य इति मत्वा स्वयं गत्वा तं गृहाभ्यन्तरं आह्वयत् । समुचितमासनं च दत्वा अपृच्छत् आगमनप्रयोजनम् । तदा ब्राह्मणो वदति "अहं दरिद्रो ब्राह्मणः । मम पिता यदा जीवति तदा मामेकदाऽवोचत् । "रे, मम मरणसमये मह्यं एकं रूप्यकं यच्छ"इति । मूढः, विस्मृतिशीलः, ततोऽपि दरिद्रश्च अहं तथा नाऽकरवम् । स्वर्गतोऽपि, मम पिता तेन क्रुद्धोऽभवत् । गतसप्ताहे मम स्वप्ने आगत्य "रे मूढ, मदभीष्टं किं इति न त्वया पूरितम् । त्वं मम मरणकाले रूप्यकं न दत्तवान् । मम तेन बहु प्रयोज न अस्ति । कथमपि कृत्वा लुब्धपालकाय वणिजे तद्दास्यसिमे चेत् सः आत्मः मरणानन्तरं दिवं प्रत्यागमनसमये तत् आनीय सुभद्रं दास्यति । यतः सः नसव्ययी विना भुक्तमपि स्वधनं सुभद्रं रक्षति । "

तस्मात्कारणात बहु परिश्रम्य रूप्यमेकं संपाद्य पित्राज्ञापरिपालनार्थं

त्वद्दर्शनार्थमागतोऽस्मि । कृपया रूप्यकमिदं गृह्यताम्। पूज्याय मम पित्रे इदं दीयताम् इति ।

ब्राह्मणे एवमुक्तवति लुब्धपालकोऽत्यन्तं विस्मितः अभवत् । पृष्टवांश्च मरणानन्तरं कोऽपि स्वेन साकं धनं नेष्यति किम्? अश्रुतपूर्वोऽयं विषयः । मया तु तथा कर्तुं न शक्यते । ”

तदा विप्रः प्राह – अयि भोः, विना भुक्तं त्वं धनं सञ्चिनोषि खलु । कस्मैचिदपि न लवमात्र यच्छसि । स्वजनेभ्योऽपि न यच्छसि ” इति जना मन्वते । नो चेत्, धनस्य चतुर्षु भागस्वामिषु धर्मे तवांतिके मरणं प्राप्ते के भोक्तरो भविष्यन्ति तव संपदाम्? ब्रूहीति ।

उन्मीलितलोचनः वणिक् क्षणमिव तूष्णीं भूत्वा विप्राय प्रत्यूचे– “भोः स्वामिन्, त्वं ह्यसाधारणो जनः । अज्ञानं नाम अंधं तमः मदीयं सुतरां निर्मूलितं त्वया । अस्मिन्नेव क्षणे मम सर्वस्वं तुभ्यमेव दास्यामि। स्वीकृत्य मामनुगृहाण ” इति ।

विप्रोऽहम् । धनेन मम किं प्रयोजनं स्यात्? दीनेभ्यो, दरिद्रेभ्यो, याचकेभ्यो देहि । तेन तव पुरुषार्थसिद्धिर्भविष्यति इति उक्त्वा ब्राह्मणः ततो निश्चक्रे ।





# व्यासवाल्मीकिसंवादः



महाविद्वान्
श्री कांची प्र० भ० अण्णङ्गराचार्यस्वामी

( पूर्वानुबन्धः )

**व्यासः** – वाल्मीके महर्षे! शास्त्रेषु उपपातकपरिगणनाप्रकरणे "हीनप्रेष्यं हीनसख्यं हीनगेहनिषेवणम्" इति पठितं स्मर्यते। हीनजनानां दास्यकरणम् हीनजनैस्सह स्नेहकरणम्, हीनानां गेहे निवासकरणम्, इत्येतानि पातकतया हि कथ्यन्ते। एवं च सति जघन्येष्वग्रगण्येन गुहेन सह कथं नु ककुत्स्थकुलतिलको रामचन्द्रः सख्यं चक्रे? कथं वा तत् गुणकोटौ निवेश्य प्रशस्यते? इति कतिपये चोदयन्ति। अत्र प्रसादयतात्तत्रभवान् मे हृदयम्।

**वाल्मीकिः** – विज्ञापये। प्रथमतस्तावदिदं वच्मि; श्रीरामचरित्रे हीनसख्यं परं दृश्यते; भवत्प्रणीतमहाभारताद्यारूढे श्रीकृष्णचरिते हीनप्रेष्यम् हीनसख्यम् हीनगेहनिषेवणमिति त्रितयं चावलोक्यते। पाण्डवदूतत्वेन हीनप्रेष्यभावोऽजनि। गोपालबालकादिसख्येन हीनसख्यमजायत। "विदुरस्य ययौ वेश्मे" त्युक्तरीत्या विदुरादिहीनजातीयगेहनिषेवणं च जातम्। तत्र श्रीमताऽपि समाधेयमस्ति। परंतु नैतन्मे स्वरूपानुरूपं वचः युक्तरूपं विज्ञापये। यदि तावदस्मादृशा अवरजना एवंविधानि निहीनकृत्यानि कुर्युः सत्यं ते पातकिन एव स्युः। "अनुचितकारिणः अयोग्या अमी" इति साधुभिश्च गर्हिता भवितारः। यतो अस्मादृशां महत्त्वम् आगन्तुकमपायबहुलं च। निरुपाधिकमाहात्म्यशालिना भगवता

क्रियमाणं हीनसख्य - हीनदास्य - हीनगेहनिषेवणादिकं तदीयं माहात्म्यं न मात्रयाऽपि ह्रसयति, प्रत्युत पर्वताग्राधिरोपितप्रदीपवत् प्रचुरप्रकाशविभासुरं च कलयति। हीनानां दूत्यकरणेन सारथ्यकरणेन च पाण्डवदूत इति पार्थसारथिरिति च प्रथितं विरुदं प्रतिपद्य तेनैव नाम्ना दिव्यालयेषु च समाराध्यते। तथा च "महतो मन्दैस्सह नीरन्ध्रेण संश्लेषः शीलम्" इति परिष्क्रियमाणलक्षणो गुणविशेषो भगवत्येव सुष्ठु समन्वितो भवति। भगवान् रामचन्द्रो यद्यपि स्वकीयं शीलगुणं बहुत्र प्राचीकशत् तथाऽपि गुहसुग्रीवविभीषणाभिधानव्यक्तित्रितये तेन कृतं तत्प्रकाशनम् भक्तानां हृदयमार्द्रीकरोत्यतितराम्।

**व्यासः** – श्रीरामचन्द्रशीलगुणप्रकाशनस्थलं त्रितयमुदाह्रियते श्रीमता। श्रीमद्वेङ्कटनाथार्यप्रणीते दयाशतके "निषादानां नेता कपिकुलपतिः काऽपि शबरी" इति (शबरीति) चतुर्थ्या अपि व्यक्तेः परिगणनं दृश्यते; तामधिकृत्य मनाक् शुश्रूषे। भगवता रामचन्द्रेण शबरीसकाशे प्रकाशितो गुणविशेषो भवदीये रामायणे विस्तरेण नोपवर्णित इति मन्ये। भवदीयरामायणे यावदस्ति रामचरितं तावदेव, नातोऽधिकं किमपीति वक्तुं न शक्यते खलु। अन्यदपि भूयिष्ठं स्यादेव खलु। कृत्स्नमपि रामचरितं वेद ननु तत्रभवान्; तद् ब्रूहि मे शबरीविषये यथायथम्।

**वाल्मीकिः** – अर्वाचीनैः प्रामाणिकैराचार्यैरुपवर्णितमेव वर्तते तद्यथायथम्। मयेव भवताऽपि तदवलोकितमेव स्यादिति प्रत्येमि। अस्तु, स्मारये। श्रीवचनभूषणनाम्नि दिव्यशास्त्रे "दाशरथिः श्रीशबरीहस्ततो भुङ्क्ते स्म" इत्यत्र व्याख्यायाम् श्रीरम्यजामातृमुनिसार्वभौमा एवमलेखिषुः – "रघुकुलतिलक आचारप्रधानश्च भगवान् रामचन्द्रः "शबर्या पूजितस्सम्यग्रामो दशरथात्मजः" इत्युक्तप्रक्रियया, जात्या जघन्याऽपि सती गुरुशुश्रूषाख्यपरमधर्मनिरता ज्ञानाधिका

स्वकीयरसनापरीक्षितमाधुर्यशालिफलमूलादिसमर्पणौत्सुक्येन स्वागतं प्रतीक्ष्य स्थितवती शबरी स्वादरानुगुणं स्वहस्तेन यन्निवेदितवती, तत् ससन्तोषं स्वीकृतवान्" इति। अत्र च "स्वकीयरसनापरीक्षितमाधुर्यशाली" ति यत् तदिदं व्याख्यातृमहोदया मूलप्रमाणमन्तरेण नैव लिखितवन्तः स्युः। "शबर्या पूजितस्सम्यक्"इति संक्षेपरामायणोक्तमेव मूलप्रमाणं भवेत्कामम्।

व्यासः – "शबर्या पूजितस्सम्य"गिति भावत्कं वाक्यम् एतावन्तमर्थं सहेतेति मे मतिः। पुराणान्तरसंवादोऽप्यत्र वर्तत एव। एतदास्तां नाम। भगवान् दाशरथिः किमर्थमेतावन्तं महागुणं शबरीसविधे प्राचीकशत्? "रामस्यात्मसमस्सखा" इति संश्लाघितेन निरुपममैत्रीपात्रेण गुहेन दत्तं मधुपर्कं न स्वीचकार राघव इत्ययोध्याकाण्डकथया सम्यगवगम्यते। कृपया स्वीकर्तव्यमिदमिति सोत्कण्ठं प्रार्थितवते गुहाय भगवता रामचन्द्रेण "यत्त्विदं भवता किञ्चित्प्रीत्या समुपकल्पितम्। सर्वं तदनुजानामि न हि वर्ते प्रतिग्रहे॥ अश्वानां खादनेनाहमर्थी नान्येन केनचित्। एतावताऽत्रभवता भविष्यामि सुपूजितः" इति खलु प्रोक्तम्। रामस्सह सीतया सौमित्रिणा च यं रथमारुह्य समागतः, तस्य रथस्य तदानीमप्रतिनिवृत्तत्वेन वाजिनस्तत्र स्थिताः। "हे गुह! त्वया मह्यं दित्सितं क्षुधितेभ्यस्तेभ्यो वाजिभ्यो दीयताम्" इत्युक्तवान् रामः। मनुष्याणामशनमन्यत्; मृगाणामशनमन्यत। नहि गुहो घासं रामाय प्रदातुमाययौ। मधुपर्कमपि तत्सकाशात् स्वीकर्तुं न चकमे राघवः। एतादृशोऽयं शिष्टाग्रेसरः शबरीदत्तं रसनापरीक्षितमाधुर्यशालि वस्तु कथमहो सादरं स्वीकृत्य बुभुजे?

वाल्मीकिः – विज्ञापये। उदाहृतचरश्रीवचनभूषणदिव्यशास्त्रव्याख्यानपङ्क्तौ "गुरुशुश्रूषाख्यपरमधर्मनिरता ज्ञानाधिका" इति यदस्ति, तदेवात्रजीवनाडीभूतमवधेयम्। विवृणोमि तावत्। गुरुवरिवस्याभिधानः श्रेयान् स्वधर्मः

शबर्यामासीत् । तदिदं दनुकबन्धेन च रामाय न्यवेदि । "श्रमणी शबरी नाम काकुत्स्थ चिरजीविनी । त्वां तु धर्मे स्थिता नित्यम्" इति' "श्रमणीं धर्मनिपुणामभिगच्छ" इति च कबन्धवचसि धर्मशब्देनाभिहितो गुरुशुश्रूषाख्यपरधर्म एव । शबरीसविधे कुशलप्रश्नं कुर्वाणो रामचन्द्रोऽपि "कच्चित्ते गुरुशुश्रूषा सफला चारुभाषिणि ! " इत्यनुयुयुजे । सा च स्वगुरुशुश्रूषामधिकृत्य सानन्दमुत्तरमुक्तवती" "चक्षुषा तव सौम्येन पूताऽस्मि रघुनन्दन पादमूलं गमिष्यामि यानहं पर्यचारिषम् । इति । अत्र "यानहं पर्यचारिष" मित्युक्तिरवधेया । एतादृशो धर्मविशेषो गुहे नैव लब्धावकाशोऽभूत । अत एव तत्समर्पितं भोज्यवस्तु न स्वीचकार । गुरुशुश्रूषाधर्ममर्मविद्रामचन्द्रः ।

व्यासः – अत्यन्तमभिराममेतत् । एष एवात्र परमार्थः । अस्तु । गुहसकाशे "न च वर्ते प्रतिग्रहे" इति यदुक्तं रामचन्द्रेण तत्र विचारणीयमस्ति । इदानीमाह्निकं निर्वर्तयितुं गच्छेव ॥

[क्रमशः]

केचनैव महानुभावाः स्वच्छन्दं स्वच्छन्दं प्रेषितवन्तः । तेषां शुभनामानि
...भ्यः दीयन्ते । अन्यानपि प्रार्थये स्वकं अवलम्बमपि प्रदातुम् । ति. कं. ति.

## Names of Subscribers for Gairvani 1965
(Continuation)

| | | | |
|---|---|---|---|
| 92. | K. Mahadevan, Tirunelveli Junction | 5 | 00 |
| 93. | B S. K. Higher Secondary School, Chittoor | 4 | 00 |
| 94 | G. Ramachandra Sastry, Ananthapur | 5 | 00 |
| 95. | P. Ramaiah, Varigonda | 4 | 00 |
| 96. | K. Suryanarayana Reddy, Tirupati | 4 | 00 |
| 97. | S. M. P School, Bobbili | 1 | 50 |

अद्ययावत् एतावन्त एव सदस्याः ।





श्री सीतारामजी, बरोडा.

कोविदपरीक्षायां सर्वप्रथमतया समुत्तीर्णः ।



R. N. 8145/60. Postal R. No. H. 493.

वार्षिकम् रु. ४ - ००

# प्रहेलिकाः

लेखकः – रामस्वरूपशास्त्री, वैद्यः.

तिष्ठामि पादेन वसाम्यरण्ये
मौनी च शीतातपवर्षणानि ।
सहे प्रहारं परिभेदनं च
वदन्तु कोऽहं फलदो जनानाम् ॥

[वृक्षः]

नदामि नित्यं श्वसनैः परेषां
लसामि पाणौ पुरुषोत्तमस्य ।
शुक्लः पयोधेरुदरात् प्रसूतः
वदन्तु कोऽहं शुभदर्शनानाम् ॥

[शङ्खः]

वन्येषु जातेषु क्षुपेषु तेषु
ग्राम्यैः कृषिज्ञैः परिवर्धितोऽस्मि ।
वर्णेन शुद्धोऽस्मि सुकोमलो मे
किं नाम लोकस्य पिधानमस्मि ॥

[कार्पासः]

Published by Sri N. Ramanatha Iyer, B. A., B. L., Advocate &
Secretary S. B. P. Sabha, Chittoor (A. P.)
Pinted by Sri T. K. Thiruvengadacharya,
at Vijaya Press, Chittoor (A. P.) C 1000.